॥ श्रीः ॥

# श्रुतबोधः ।

श्रीयुतमहामहोपाध्यायमहाकवि-

कालिदासविरचितः ।

आगरानगरस्थायिरामेश्वरभट्टविरचित-

संस्कृतटीका-भाषाटीकाभ्यां

परिशिष्टविविधप्रश्नैश्च संवलितः ।

सोऽयं

क्षेमराज-श्रीकृष्णदासश्रेष्ठिना

मुम्बय्यां

( खेतवाडी ७ वीं गली खम्बाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् )-

मुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितः ।

संवत् १९६८, शके १८३३.

# SHRUTBODH

BY

## MAHA KAVI KALI DASS.

With Sanskrit and Hindi Commentaries,
Supplimentary portions and various
Questions for the use
of beginners

BY


**PANDIT RAMESHWAR BHATT,**

**Head Pandit, Mufid-i-Am High School, Agra,**

and Translator of Sanskrit Hitopadesh, Meghduta,
Ritu Samhar, Chand Koushik, Ratnavali,
Shakuntala, and of Several Astrological
chief books.





PRINTED AND PUBLISHED

BY

**KHEMRAJ SHRI KRISHNADASS**

AT THE

SHRI VENKATESHWAR STEAM PRESS,

**BOMBAY.**

1911.

# भूमिका ।



विद्यार्थीको जब संस्कृत वार्णीका इतना बोध हो जाता है कि साधारण गद्य पद्यका तात्पर्य स्वयं समझमें आने लगता है तौ प्रत्येक छात्रको प्रत्येक छन्द जानने तथा रचना करनेकी उत्कण्ठा चित्तमें अवश्यही होती है, अतएव श्रुतबोधके अतिरिक्त ऐसा कोईभी छन्द ग्रन्थ नहीं जो विद्यार्थियोंको सुगम और लघु हो और जिसके पठनसे साधारण छन्दोंका यथायोग्य परिज्ञान होजाय ।

श्रुतबोधकी जितनी प्रशंसा कीजाय थोडी है कारण इसके रचयिता महाकवि कालिदासजी हैं कि जिनकी कुशाग्रबुद्धिका वर्णन भोजप्रबन्धसारसे प्रकट है ।

कविमहाशयने इसमें न्यूनाधिक चालीस छन्द ऐसे संग्रह किये हैं कि जो बहुधा काव्यनाटकादिकोंमें पाये जाते हैं और एक यह औरभी सुगमता की है कि जिस छन्दका वर्णन कियाहै उसको उसी छन्दमें रचकर विद्यार्थियोंके लिये दर्पणके समान कर दिया है कि पढ़नेसे तत्कालही सब आशय जहाँका तहां सुगमरीतिसे समझमें आजाय ॥

कवीश्वरजीने जो इसे कामिनीके सम्बोधनोंसे अलंकृत कियाहै उसका कुछ तात्पर्य समझमें नहीं आताहै केवल इतनाही कहना ठीक है कि "निरंकुशाः कवयः" अर्थात् कविलोग स्वतंत्र होते हैं अथवा कौन जान सक्ताहै कि जिस समय यह ग्रन्थ रचाथा उस समय किस श्रृंगार रसमें मग्न थे ।

मैंने इसकी सरल संस्कृत व्याख्या तथा भाषाटीका छात्रोंके उपकारार्थ कीहै और कुछ आवश्यकीय तात्पर्य वृत्तरत्नाकर तथा छन्दोमञ्जरीमेंसे लेकर अन्तमें कुछ प्रश्नभी लिखे हैं कि जिनका विचार करनेसे छात्र जन काशीपुरी आदिकी प्रथम परीक्षामें निस्सन्देह उत्तीर्ण होकर मेरे इस अल्प परिश्रमको सफल करेंगे ॥

रामेश्वर भट्ट—
प्रथम संस्कृताध्यापक मुफीद आम हाइस्कूल आगरा गोकुलपुरा निवासी
( पश्चिमोत्तरदेश )

भाद्रपद कृष्णा ८
संवत् १९५२

॥ श्रीः ॥

श्रीगणेशाय नमः ॥

# श्रुतबोधः ।

संस्कृतटीका-भाषाटीकासहितः ।



छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तमहं संप्रवक्ष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥

स्मारंस्मारं गुरोरुक्तिं पार्वतीपरमेश्वरौ ।
प्रणम्य श्रुतबोधस्य व्याख्यां कुर्वे यथामति ॥ १ ॥

सं०टी०-छन्दसामिति । येन श्रुतमात्रेण छन्दसां अनुष्टुबादीनां लक्षणं बुध्यते विज्ञायते तम् अविस्तरं (न विद्यते विस्तरो यस्मिन् सः तम्) संक्षिप्तं श्रुतबोधनामकं छन्दोग्रन्थमहं संप्रवक्ष्यामि ॥ १ ॥

भावार्थः-जिस ग्रन्थके श्रवण करनेहीसे छन्दोंका लक्षण जाना जाताहै उस श्रुतबोध नाम अल्प विस्तारवाले ग्रन्थको कहूंगा ॥ १ ॥

संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ॥

सं०टी०-संयुक्ताद्यमिति । संयुक्तस्य संयोगीभूतस्य आद्यं दीर्घं दीर्घस्वरयुक्तं सानुस्वारम् (अनुस्वारेण सह वर्त्तत इति तत) अनुस्वारयुतं विसर्गसंमिश्रं विसर्गसहितम् अक्षरं गुरु दीर्घं विज्ञेयम् । पादस्य चरणस्य अन्ते स्थितं विकल्पेन गुरु विज्ञेयम् ॥ २ ॥

भावार्थः-संयुक्तके आदिका, दीर्घ, अनुस्वारयुक्त और विसर्ग जिसके अन्तमें हो ऐसा अक्षर गुरु कहाताहै और चरणके अन्तके अक्षरको विकल्प करके गुरु जानना चाहिये ॥ २ ॥

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते ।
त्रिमात्रश्च प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम् ॥ ३ ॥

सं०टी०-एकमात्र इति। एकमात्रः ( एका मात्रा यस्य सः ) वर्णः ह्रस्वः भवेत्, द्विमात्रः ( द्वे मात्रे यस्य सः ) वर्णः दीर्घः उच्यते, त्रिमात्रः ( तिस्रः मात्रा यस्य सः ) वर्णः प्लुतः ज्ञेयः, अर्द्धमात्रकं व्यञ्जनं बोध्यमिति शेषः ॥ ३ ॥

भाषार्थः-एकमात्रावाला अक्षर ह्रस्व, दो मात्राका दीर्घ, तीन मात्राका प्लुत और अर्द्धमात्रक व्यञ्जन कहाता है ॥ ३ ॥

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ ४ ॥

सं०टी०-यस्या इति । यस्याः प्रथमे पादे तृतीयपादेऽपि द्वादश मात्राः स्युः तथा द्वितीये अष्टादश मात्राः चतुर्थके पादे पञ्चदश मात्राः स्युः सा आर्या ॥ ४ ॥

भाषार्थः-जिस श्लोकके प्रथम और तीसरे चरणमें १२ मात्रा, दूसरेमें १८, और चतुर्थमें १५ मात्रा हों उसको आर्याछन्द कहते हैं इसमें केवल मात्रा प्रधान हैं ॥ ४ ॥

आर्य्यापूर्वार्द्धसमं द्वितीयमपि भवति यत्र हंसगते । छन्दोविदस्तदानीं गीतिंताममृतवाणि भाषन्ते ॥ ५ ॥

सं०टी०-आर्येति । हे हंसगते ! ( हंसस्य गतिर्गमनामिव गमनं यस्यास्तत्सम्बुद्धौ ) यत्र यस्मिन् वृत्ते आर्यायाः पूर्वार्द्धेन समं तुल्यं द्वितीयं परार्द्धमपि भवति यथा आर्य्यायाः पूर्वार्द्धे त्रिंशन्मात्रा भवन्ति तत्तुल्यमित्यर्थः।हे अमृतवाणि(अमृतमिव

वाणी यस्यास्तत्संबुद्धौ ) तदानीं छन्दोविदः(छन्दांसि विदन्ति जानन्तीति ते ) छन्दश्शास्त्रतत्त्वज्ञाः तां गीतिं भाषन्ते ॥ ५ ॥

भाषार्थः-हे हंसके समान चलनेवाली ! जिस श्लोकमें पूर्वार्द्ध तथा उत्तरार्द्ध आर्याके पूर्वार्द्धके समान हों तौ हे अमृतके समान मिष्टभाषण करनेवाली ! छन्दःशास्त्र जाननेवाले उसे गीति छन्द कहते हैं इस श्लोकके पूर्वार्द्ध तथा उत्तरार्द्धमें ३० । ३० मात्रा होती हैं ॥ ५ ॥

आर्य्योत्तरार्द्धतुल्य प्रथमार्द्धमपि प्रयुक्तं चेत् ।
कामिनि तामुपगीतिं प्रतिभाषन्ते महा-
कवयः ॥ ६ ॥

सं०टी०-आर्येति । हे कामिनि ! प्रथमार्द्धमपि आर्य्यावृत्तस्य उत्तरार्द्धेन तुल्यं प्रयुक्तं विरचितं चेत् यथा आर्य्योत्तरार्द्धे सप्तविंशतिमात्रा भवन्ति तत्तुल्यमित्यर्थः । महाकवयः ( महान्तश्च ते कवयः ) तां उपगीतिं प्रतिभाषन्ते प्रकाशयन्ते ॥ ६ ॥

भाषार्थः-हे कामिनि ! जिस श्लोकमें आर्य्याके उत्तरार्द्धके तुल्य पूर्वार्द्ध भी हो, तौ कवीश्वर लोग उसे उपगीति छंद कहतेहैं इसके पूर्वार्द्ध तथा उत्तरार्द्धमें २७ । २७ मात्रा होतीहैं ॥ ६ ॥

आद्यचतुर्थं पञ्चमकं चेत् ।
यत्र गुरु स्यात्साक्षरपङ्क्तिः ॥ ७ ॥

सं०टी०-आद्येति । यत्र यस्यां वृत्तौ आद्यम् आदिभूतम् अक्षरं चतुर्थं पञ्चमकं च गुरु स्यात् सा अक्षरपंक्तिर्विज्ञेया इति शेषः ॥ ७ ॥

भाषार्थः-जिस छन्दमें प्रथम चतुर्थ तथा पञ्चम अक्षर गुरु हों उसे अक्षरपंक्ति कहतेहैं ॥ ७ ॥

अगुरु चतुष्कं भवति गुरू द्वौ । घनकुचयुग्मे
शशिवदनासौ ॥ ८ ॥

सं०टी०-अगुर्विति । हे घनकुचयुग्मे ! ( घनं कठिनं कुचयुग्मं स्तनयुगलं यस्यास्तत्संबुद्धौ ) यत्र यस्यां वृत्तौ अगुरु लघुचतुष्कं वर्णचतुष्टयं भवति द्वौ वर्णौ पञ्चमषष्ठौ इत्यर्थः गुरू भवतस्तदाऽसौ शशिवदना बोध्येति शेषः ॥ ८ ॥

भाषार्थः-हे कठिन कुचोंवाली ! जिस छन्दमें प्रथम चार अक्षर लघु और दो गुरु हों उसे शशिवदना छन्द कहते हैं ॥ ८ ॥

तुर्यं पञ्चमकं चेद्यत्र स्याल्लघु बाले । विद्वद्भिर्मृ-
गनेत्रे प्रोक्ता सा मदलेखा ॥ ९ ॥

सं०टी०-तुर्यमिति । हे बाले ! नवयौवनवति ! यत्र यस्यां वृत्तौ तुर्यं चतुर्थकं पञ्चमकं च लघु ह्रस्वं स्यात् हे मृगनेत्रे ! ( मृगस्य नेत्रे इव नेत्रे यस्यास्तत्संबुद्धौ ) विद्वद्भिः शास्त्रज्ञैः सा मदलेखा प्रोक्ता कथिता ॥ ९ ॥

भाषार्थः--हे बाले ! जिसमें चतुर्थ और पञ्चम अक्षर लघु हों तो हे मृगनयने ! पंडित लोग उसे मदलेखा कहते हैं ॥ ९ ॥

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुः-
पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ॥

सं०टी०-श्लोक इति । श्लोके अनुष्टुब्नामके पद्ये सर्वत्र चतुर्षु चरणेष्वित्यर्थः षष्ठं गुरु पञ्चमं लघु ज्ञेयं बोध्यम् । द्विचतुःपादयोः द्वितीयचतुर्थचरणयोः सप्तमं ह्रस्वम्, अन्ययोः प्रथमतृतीयपादयोः सप्तमं दीर्घं ज्ञेयमिति शेषः ॥ १० ॥

भाषार्थः--जिस श्लोकके चारों चरणोंमें पञ्चम अक्षर लघु और छठा अक्षर गुरु हो और द्वितीय चतुर्थ पादोंमें सप्तम अक्षर ह्रस्व और प्रथम तृतीय पादोंमें सप्तम दीर्घ हो तो उसे अनुष्टुप् कहते हैं ॥ १० ॥

आदिगतं तुर्यगतं पञ्चमकं चान्त्यगतम् । स्या-
द्गुरु चेत्संकथितं माणवकाक्रीडमिदम् ॥ ११ ॥

सं-टी०-आदिगतमिति। आदिगतं प्रथमं, तुर्य्यगतं चतुर्थं, पञ्चमकम् अन्त्यगतम् अन्त्यस्थितम् अष्टममित्यर्थः चेद्गुरु स्यात् तदिदं माणवकाक्रीडं कथितं पण्डितैरिति शेषः ॥११॥

भाषार्थः-जिसमें प्रथम, चतुर्थ, पञ्चम तथा अन्तका ( अष्टम ) अक्षर गुरु हों उसे माणवकाक्रीड छन्द कहते हैं ॥ ११ ॥

द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा। तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ १२ ॥

सं० टी०-द्वितुर्येति। यदा द्वितुर्य्यषष्ठं द्वितीयं चतुर्थं षष्ठम् अष्टमं च गुरु प्रयोजितं रचितं तदा बुधाः पण्डितास्तां नगस्वरूपिणीं निवेदयन्ति ॥ १२ ॥

भाषार्थः-जिसमें द्वितीय चतुर्थ षष्ठ अष्टम अक्षर दीर्घ हों उसे विद्वान् लोग नगस्वरूपिणी छन्द कहते हैं ॥ १२ ॥

सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः। विद्वद्वृन्दैर्वीणावाणि व्याख्याता सा विद्युन्माला ॥ १३ ॥

सं० टी०-सर्वे इति हे वीणावाणि! ( वीणायाः वाणी इव वाणी यस्यास्तत्संबुद्धौ ) यस्यां सर्वे वर्णाः दीर्घाः वेदैर्वेदैः चतुर्भिश्चतुर्भिः विश्रामः यतिः स्यात् सा विद्वद्वृन्दैः पण्डितजनसमूहैः विद्युन्माला व्याख्याता ॥ १३ ॥

भाषार्थः-हे वीणाके समान मधुर भाषण करनेवाली! जिसमें सम्पूर्ण वर्ण दीर्घ हों और चार२ अक्षरोंके ऊपर विराम अर्थात् ठहराव हो तौ पण्डित जनोंने उसे विद्युन्माला छंद कहा है ॥ १३ ॥

तन्वि गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम्। इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला ॥ १४ ॥

सं० टी०—तन्वीति । हे तन्वि ! हे कृशाङ्गि ! यत्र यस्यां वृत्तौ आद्यं चतुर्थं, पञ्चमं षष्ठम् अन्त्यम् अन्तिमं दशममित्यर्थः उपान्त्यं ( अन्त्यस्य समीपम् उपान्त्यं ) नवममिति भावः गुरु स्यात्। यत्र इन्द्रियबाणैः पञ्चभिःपञ्चभिरक्षरैः विरामः विरतिः स्यात् सा चम्पकमाला कथनीया ॥ १४ ॥

भाषार्थः—हे कृश अङ्गवाली ! जिसमें प्रथम चतुर्थ पञ्चम षष्ठ और अन्तका अर्थात् दशम तथा अन्त्यके पासका अर्थात् नवम अक्षर दीर्घ हो और पांच पांच वर्णोंपर विश्राम हो उसे चम्पकमाला छंद कहना चाहिये॥१४॥

चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे ।
छन्दसि दक्षा ये कवयस्तन्मणिबंधं ते ब्रुवते ॥१५॥

सं० टी०—चम्पकमालेति । हे प्रेमनिधे ! यत्र यस्मिञ्छन्दसि चम्पकमाला अन्त्यविहीना दशमाक्षरविहीनेत्यर्थः भवेत् । छन्दसि दक्षाः चतुराः ये कवयस्ते तन्मणिबन्धं ब्रुवते कथयन्ति ॥ १५ ॥

भाषार्थः—हे प्रेमनिधे ! अन्त्य अक्षरकरके रहित जहां चम्पकमालाका पूर्ण लक्षण हो तौ छन्दःशास्त्रके जाननेवाले कवीश्वर उसे मणिबंध छन्द कहते हैं ॥ १५ ॥

मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे यदि-
भवति या । सा विद्वद्भिर्ध्रुवमभिहिता ज्ञेया
हंसी कमलवदने ॥ १६ ॥

सं० टी०—मन्दाक्रान्तेति । हे सालंकारे ! ( अलंकारेण सह वर्तमाना तत्संबुद्धौ ) हे आभूषणभूषिते ! या मन्दाक्रान्ता यदि अन्त्ययतिरहिता भवति तदा हे कमलवदने ( कमलवत् वदनं मुखं यस्यास्तत्संबुद्धौ ) विद्वद्भिः पण्डितैः सा ध्रुवं हंसी अभिहिता कथिता ज्ञेया त्वयेति शेषः ॥ १६ ॥

भाषार्थः-हे अलङ्कार धारण करनेवाली ! जो मन्दाक्रांताकी अन्त्य यति ( विश्राम ) रहित छन्द हो तो हे कमलमुखि ! पंडित जनोंने उसे हंसी छन्द कहाहै ॥ १६ ॥

मंदाक्रान्तामें १७ अक्षर होतेहैं और ४ । ६ और ७ पर विश्राम है सो देखो । परन्तु हंसी छन्दमें १० अक्षर हैं आदिके ४ दीर्घ फिर ५ लघु फिर १ दीर्घ और ४ तथा ६ अक्षरों पर विश्राम है । इसमें ७ अक्षरकी पिछली यति नहीं है ॥

ह्रस्वो वर्णो जायते यत्र षष्ठः कम्बुग्रीवे तद्वदे-
वाष्टमान्त्यः । विश्रामः स्यात्तन्वि वेदैस्तुरंगै-
स्तां भाषन्ते शालिनीं छान्दसीयाः ॥ १७ ॥

सं० टी०-ह्रस्व इति । हे कम्बुग्रीवे ! (कम्बुवत् ग्रीवा यस्या स्तत्संबुद्धौ ) यत्र यस्यां वृत्तौ षष्ठः वर्णः ह्रस्वः तद्वत् अष्टमान्त्यः ( अष्टमस्य अन्त्यः ) नवम इति भावः ह्रस्वः जायते हे तन्वि ! वेदैश्चतुर्भिः तुरङ्गैः सप्तभिः विश्रामः स्यात् छान्दसीयाः छन्दश्शास्त्रतत्त्वज्ञास्तां शालिनीं भाषन्ते कथयन्ति१७

भाषार्थः-हे शंखके समान ग्रीवावाली ! जिसमें छठा और अष्टमान्त्य अर्थात् नवम अक्षर लघु हों और ४ तथा ७ अक्षरोंपर विश्राम हो तौ हे कृश अंगवाली ! छन्दके ज्ञाता पुरुष उसको शालिनी छन्द कहतेहैं॥ १७॥

आद्यचतुर्थमहीननितम्बे सप्तमकं दशमं च
तथान्त्यम् । यत्र गुरु प्रकटस्मरसारे । तत्क-
थितं ननु दोधकवृत्तम् ॥ १८ ॥

सं० टी०-आद्येति । हे अहीननितम्बे ! ( अहीनौ स्थूलौ नितम्बौ कटिपश्चाद्भागौ यस्यास्तत्संबुद्धौ ) हे प्रकटस्मरसारे! ( प्रकटः स्मरसारः कामस्य बलं यस्यास्तत्संबुद्धौ ) यत्र यस्मिन् वृत्ते आद्यं चतुर्थं सप्तमकं दशमं च तथा अन्त्यम् एकादशमिति भावः गुरु, तत् दोधकवृत्तं कथितम् ॥ १८ ॥

भावार्थः—हे स्थूलनितम्बवाली ! हे कामदेवके बलको प्रकट करनेवाली ! जिसमें प्रथम, चतुर्थ, सप्तम, दशम तथा अन्त्य अक्षर गुरु हों तो उसको दोधकवृत्त कहते हैं ॥ १८ ॥

यस्यास्त्रिषट्सप्तममक्षरं स्याद् ह्रस्वं सुजंघे ! नवमं च तद्वत् । गत्या विलज्जीकृतहंस-कान्ते तामिन्द्रवज्रां ब्रुवते कवीन्द्राः ॥ १९ ॥

सं० टी०—हे सुजंघे ! ( सुष्ठु शोभने जंघे यस्यास्तत्संबुद्धौ ) हे गत्या विलज्जीकृतहंसकान्ते ! ( गत्या स्वगमनेन विलज्जीकृता हंसस्य कान्तिः शोभा यया तत्संबुद्धौ ) यस्याः त्रिषट्सप्तमं तृतीयं षष्ठं सप्तमं तद्वत् नवमं चाक्षरं ह्रस्वं स्यात् कवीन्द्राः ( कविषु इन्द्राः ) कविश्रेष्ठास्तां इन्द्रवज्रां ब्रुवते कथयन्ति ॥ १९ ॥

भावार्थः—हे सुन्दर जंघावाली ! हे हंसकी गतिको लज्जित करनेवाली ! जिसका तृतीय षष्ठ सप्तम नवम अक्षर ह्रस्व हों तो उसको कवीश्वर इन्द्रवज्रा कहते हैं ॥ १९ ॥

यदीन्द्रवज्राचरणेषु पूर्वे भवन्ति वर्णा लघवः सुवर्णे । अमन्दमाद्यन्मदने तदानीमुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥ २० ॥

सं० टी०—यदीति । हे सुवर्णे ! यदि इन्द्रवज्रायाश्चरणेषु चतुर्षु पादेषु पूर्वे वर्णाः लघवः भवन्ति ( शेषमिन्द्रवज्रावत् ) तदानीं हे अमन्दमाद्यन्मदने ! ( अमन्दं बहुलं माद्यन् मदं कुर्वन् मदनो यस्यां तत्संबुद्धौ ) कवीन्द्रैः कविश्रेष्ठैः उपेन्द्रवज्रा कथिता ॥ २० ॥

भावार्थः—हे सुन्दरि ! जो इन्द्रवज्राके चारों चरणोंके पूर्वके अक्षर ह्रस्व हों तो हे अधिक कामवाली ! कवीश्वर लोग उसे उपेन्द्रवज्रा कहतेहैं२०॥

यत्र द्वयोरप्यनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते । विद्वद्भिराद्यैः परिकीर्तिता सा प्रयुज्यतामित्युपजातिरेषा ॥ २१ ॥

सं०टी०-यत्रेति । हे सीमन्तिनि ! (सीमन्तः केशवेशो विद्यते यस्यास्तत्संबुद्धौ) हे चन्द्रकान्ते (चन्द्रवत्कान्तिर्यस्यास्तत्संबुद्धौ) यत्र यस्यां वृत्तौ द्वयोरपि अनयोः इन्द्रवज्रोपेन्द्रवज्रयोः पादाश्चरणाः भवन्ति (यथा प्रथमतृतीयपादयोः इन्द्रवज्रालक्षणं द्वितीयचतुर्थपादयोः उपेन्द्रवज्रालक्षणं) आद्यैः भूतपूर्वैः विद्वद्भिः पण्डितैः उपजातिरिति परिकीर्तिता कथिता । एषा सा प्रयुज्यताम् ॥ २१ ॥

भाषार्थः-हे सुन्दर केशवाली ! जिसमें इन्द्रवज्रा और उपेन्द्रवज्रा दोनोंके चरण हों अर्थात् प्रथम तृतीय चरण इन्द्रवज्राके और द्वितीय चतुर्थ उपेन्द्रवज्राके तो हे चन्द्रके समान कान्तिवाली ! प्राचीन कवियोंने इसे उपजाति छन्द कहाहै ॥ २१ ॥

आख्यानकी सा प्रकटीकृतार्थे यदीन्द्रवज्राचरणः पुरस्तात् । उपेन्द्रवज्राचरणास्त्रयोऽन्ये मनीषिणोक्ता विपरीतपूर्वा ॥ २२ ॥

सं०टी०-आख्यानकीति । हे प्रकटीकृतार्थे ! (प्रकटीकृतः अर्थः अभिप्रायः यया सा तत्संबुद्धौ) यदि पुरस्तात् प्रथमः इन्द्रवज्राचरणः स्यात् अन्ये त्रयः द्वितीयतृतीयचतुर्थाश्चरणा इति भावः उपेन्द्रवज्राचरणास्तदा सा मनीषिणा विद्वद्वरेण विपरीतपूर्वा वा आख्यानकी उक्ता ॥ २२ ॥

भाषार्थः-हे अर्थ प्रकट करनेवाली ! जो प्रथम चरण इन्द्रवज्राका हो और शेष तीन चरण उपेन्द्रवज्राके हों तो पण्डितोंने इसे आख्यानकी वा विपरीतपूर्वा कहाहै ॥ २२ ॥

आद्यमक्षरमतस्तृतीयकं सप्तमं च नवमं तथा-
न्तिमम् । दीर्घमिन्दुमुखि यत्र जायते तां
वदन्ति कवयो रथोद्धताम् ॥ २३ ॥

सं०टी०–आद्यमिति । हे इन्दुमुखि ! ( इन्दुश्चन्द्रः तद्वन्मुखं यस्यास्तत्संबुद्धौ ) यत्र यस्मिन् वृत्ते आद्यं प्रथमम् अतः परं तृतीयकं सप्तमं नवमं च तथा अन्तिमम् एकादशमिति भावः । अक्षरं दीर्घं जायते कवयस्तां रथोद्धतां कथयन्ति ॥ २३ ॥

भाषार्थः–हे चन्द्रमुखि ! जिसमें प्रथम, तृतीय, सप्तम, नवम तथा अन्त्य अक्षर दीर्घ हों तो कविजन उसे रथोद्धता छन्द कहते हैं ॥ २३ ॥

अक्षरं च नवमं दशमं च व्यत्ययाद्भवति यत्र
विनीते । प्राक्तनैः सुनयने यदि सैव स्वागतेति
कविभिः कथिताऽसौ ॥ २४ ॥

सं०टी०–अक्षरमिति । हे विनीते ! विनयवति ! हे सुनयने ( सुष्ठु शोभने नयने नेत्रे यस्यास्तत्संबुद्धौ ) यत्र यस्मिन् वृत्ते ( रथोद्धतायाः ) नवमं दशमं चाक्षरं व्यत्ययात् विपर्ययात् भवति चेत् ( यथा रथोद्धतायाः नवममक्षरं गुरु दशममक्षरं लघु भवति किन्त्वत्र स्वागतायां नवमाक्षरं लघु दशमञ्चाक्षरं गुरु भवेत् ) तर्हि प्राक्तनैः प्राचीनैः कविभिः सैव रथोद्धता एव असौ स्वागतेति कथिता ॥ २४ ॥

भाषार्थः–हे विनयवाली ! हे सुन्दर नेत्रवाली ! जिसमें नवम और दशम अक्षर विपरीत हों अर्थात् नवम दशमके सदृश और दशम नवम के समान हो तो कवियोंने उसे स्वागता छंद कहाहै रथोद्धतामें नवम दीर्घ दशम ह्रस्व है और इसमें दशम दीर्घ और नवम ह्रस्व है इतनाही भेद है ॥ २४ ॥

सतृतीयकषष्ठमनङ्गरते नवमं विरतिप्रभवं गुरु चेत्। घनपीनपयोधरभारनते ननु तोटकवृत्तमिदं कथितम् ॥ २५ ॥

सं०टी०-सतृतीयकेति। हे अनङ्गरते! ( अनङ्गे कामे रतिर्यस्यास्तत्संबुद्धौ ) चेद्यदि सतृतीयकषष्ठं तृतीयषष्ठाक्षरसहितं नवमं विरतिप्रभवं ( विरतौ प्रभव उत्पत्तिर्यस्य तत् ) द्वादशाक्षरमिति भावः गुरु भवेत् तदा हे घनपीनपयोधरभारनते ( घनौ पीनौ च घनपीनौ कठिनस्थूलौ तौ पयोधरौ स्तनौ तयोर्भारेण नता या सा तत्सम्बुद्धौ ) नन्विदं तोटकवृत्तं कथितम् ॥ २५ ॥

भाषार्थः-हे काममें रतिवाली ! जिसमें तीसरा छठा नवम और अन्त्य अक्षर गुरु हों तो हे कठिन स्थूल स्तनोंके भारसे झुकी हुई! उसको तोटकवृत्त कहते हैं ॥ २५ ॥

यदि तोटकस्य गुरु पञ्चमकं विहितं विलासिनि तदक्षरकम्। रससंख्यकं गुरु न चेदबले प्रमिताक्षरेति कविभिः कथिता ॥ २६ ॥

सं०टी०-यदीति। हे विलासिनि! यदि तोटकस्य पंचमकं तत् अक्षरकं गुरु विहितं प्रयोजितं तथा रससंख्यकं षष्ठाक्षरं गुरु न चेत् अर्थात् लघु स्यात् तदा हे अबले! कविभिः प्रमिताक्षरा इति कथिता ॥ २६ ॥

भाषार्थः-हे विलास करनेवाली ! यदि तोटक छन्दका पञ्चम अक्षर गुरु हो और छठा ह्रस्व हो तो हे अबले ! कवियोंने उसे प्रमिताक्षरा कहा है ॥ २६ ॥

यदाद्यं चतुर्थं तथा सप्तमं स्यात्तथैवाक्षरं ह्रस्व-

मेकादशाद्यम् । शरच्चन्द्रविद्वेषिवक्त्रारविन्दे
तदुक्तं कवीन्द्रैर्भुजंगप्रयातम् ॥ २७ ॥

सं०टी०–यदेति। हे शरच्चन्द्रविद्वेषिवक्त्रारविन्दे! (शरदः चन्द्रः शरच्चन्द्रः तस्य विद्वेषि वक्त्रारविन्दं मुखकमलं यस्यास्तत्संबुद्धौ) यदा आद्यं चतुर्थं सप्तमम् एकादशाद्यं दशममक्षरं ह्रस्वं स्यात् तदा कवीन्द्रैः कविश्रेष्ठैस्तद्भुजङ्गप्रयातमुक्तं कथितम् ॥ २७ ॥

भाषार्थः–हे शरद्के चन्द्रमाको अपने मुखकमलसे लजित करनेवाली! जिसमें प्रथम, चतुर्थ, सप्तम और दशम अक्षर ह्रस्व हों तो कवीश्वरोंने उसे भुजङ्गप्रयात छन्द कहाहै ॥ ७ ॥

अयि कृशोदरि यत्र चतुर्थकं गुरु च सप्तमकं-
दशमं तथा। विरतिगं च तथैव सुमध्यमे द्रुत-
विलंबितमित्युपदिश्यते ॥ २८ ॥

सं०टी०–अयीति। हे कृशोदरि! (कृशमुदरं यस्यास्तत्सम्बुद्धौ) यत्र यस्मिन् वृत्ते चतुर्थकं सप्तमकं तथा दशमं विरतिगं च द्वादशमितं च गुरु अन्ये अष्टौ लघवः इति शेषः तदा हे सुमध्यमे (शोभनं मध्यमं यस्यास्तत्सम्बुद्धौ) द्रुतविलम्बितम् इति उपदिश्यते कथ्यते ॥ २८ ॥

भाषार्थः–हे कृश अंगवाली! जिसमें चतुर्थ सप्तम दशम और अन्त्य अक्षर गुरु हों तो पण्डित जन उसे द्रुतविलम्बित छन्द कहते हैं ॥ २८ ॥

प्रथमाक्षरमाद्यतृतीययोर्द्रुतविलंबितकस्य हि
पादयोः। यदि नास्ति तदा कमलेक्षणे भवति
सुन्दरि सा हरिणीप्लुता ॥ २९ ॥

सं०टी०–प्रथमेति। हे कमलेक्षणे! (कमले इव ईक्षणे यस्यास्तत्संबुद्धौ) द्रुतविलम्बितकस्य द्रुतविलम्बितच्छन्दसः आद्य-

तृतीययोः पादयोश्चरणयोः प्रथमाक्षरं यदि न चेत् तदा हे सुन्दरि ! सा हरिणीप्लुता छन्दो भवति ॥ २९ ॥

भाषार्थः-हे कमलनयने ! यदि द्रुतविलम्बित छन्दके प्रथम और तृतीय पादोंमें आदिका अक्षर न हो तो हे सुन्दरि ! उसको हरिणीप्लुता कहते हैं ॥ २९ ॥

उपेन्द्रवज्राचरणेषु सन्ति चेदुपान्त्यवर्णा लघवः परे कृताः ॥ मदोल्लसद्भ्रूजितकामका-र्मुके वदन्ति वंशस्थमिदं बुधास्तदा ॥ ३० ॥

सं०टी०-उपेन्द्रवज्रेति । हे मदोल्लसद्भ्रूजितकामकार्मुके ! ( मदेन उल्लसन्त्यौ भ्रुवौ ताभ्यां जितं कामस्य मदनस्य कार्मुकं धनुर्यया सा तत्संबुद्धौ ) यदा उपेन्द्रवज्राचरणेषु चतुर्षु पादेषु चेत् उपान्त्यवर्णाः अन्त्यस्य समीपस्था वर्णाः एकादश वर्णा इति भावः लघवः सन्ति परे द्वादश वर्णाः दीर्घाः कृताः तदा बुधाः पण्डिता इदं वंशस्थं वदन्ति ॥ ३० ॥

भाषार्थः-हे भ्रुकुटीके विलाससे कामदेवके धनुषको जीतनेवाली ! जो उपेन्द्रवज्राके चारों चरणोंमें उपान्त्य वर्ण अर्थात् द्वादश अक्षरके पूर्वका एकादश अक्षर ह्रस्व हो, और बारहवां अक्षर गुरु होय तौ पंडित लोग उसे वंशस्थ छन्द कहते हैं ॥ ३० ॥

यस्यामशोकांकुरपाणिपल्लवे वंशस्थपादा गुरुपूर्ववर्णकाः । तारुण्यहेलारतिरंगलालसे तामिन्द्रवंशां कवयः प्रचक्षते ॥ ३१ ॥

सं०टी०-यस्यामिति । हे अशोकांकुरपाणिपल्लवे ! ( अशोकस्य अंकुरवत् पाणिपल्लवौ यस्यास्तत्संबुद्धौ ) यस्यां वंशस्थपादाः गुरुपूर्ववर्णकाः चतुर्षु पादेषु पूर्वं गुरुवर्णाः सन्ति हे तारुण्यहेलारतिरङ्गलालसे ! ( तरुणस्य भावः तारुण्यं तेन

या हेला विलासः तया रतिरङ्गे लालसा अभिलाषा यस्यास्तत्संबुद्धौ ) कवयस्ताम् इंद्रवंशां प्रचक्षते कथयन्ति ॥ ३१ ॥

भाषार्थः--हे अशोकके अङ्कुरके समान पाणिपल्लववाली ! जिसमें वंशस्थ छन्दके आदि अक्षर दीर्घ हों तौ हे तरुणताके कारण रतिमें अभिलाषा करनेवाली ! कविलोग उसे इन्द्रवंशा छन्द कहते हैं ॥ ३१ ॥

यस्यां प्रिये प्रथमकमक्षरद्वयं तुर्य्यं तथा गुरु
नवमं दशान्तिकम् । सान्त्यं भवेद्यतिरपि चेद्यु-
गग्रहैः सा लक्ष्यताममृतलते प्रभावती ॥ ३२ ॥

सं०टी०-यस्यामिति । हे प्रिये ! हे अमृतलते ! ( अमृतस्य लता इव तत्संबुद्धौ ) यस्यां प्रथमकम् अक्षरद्वयं आद्यं द्वितीयं तथा तुर्यं चतुर्थं नवमं दशान्तिकम् एकादशं सान्त्यं ( अन्त्येन सह वर्तमानमिति सान्त्यम् ) त्रयोदशवर्णसहितमिति भावः गुरु भवेत् युगग्रहैः चतुर्भिर्नवभिश्चाक्षरैश्चेत् विरतिः यतिः सा प्रभावती लक्ष्यताम् ॥ ३२ ॥

भाषार्थः--हे ! प्रिये जिसमें दो अक्षर आदिके और चतुर्थ नवम एकादश तथा अन्त्य अक्षर दीर्घ हों और हे अमृत लताके समान ! जहां चतुर्थ और नवम अक्षरपर विराम हो तौ उसे प्रभावती छन्द जानना ॥ ३२ ॥

आद्यं चेत्त्रितयमथाष्टमं नवान्त्यं द्वावन्त्यौ गुरु
विरतौ सुभाषिते स्यात्।विश्रामो भवति महेश-
नेत्रदिग्भिर्विज्ञेया ननु सुदति प्रहर्षिणी सा ॥३३॥

सं०टी०-आद्यमिति । हे सुभाषिते ( सुष्ठु शोभनं भाषितं यस्यास्तत्संबुद्धौ ) चेद्यदि आद्यं त्रितयं प्रथमं द्वितीयं तृतीयमिति भावः अथेत्यनंतरम् अष्टमं नवान्त्यं दशमम् अन्त्यौ द्वौ द्वादशत्रयोदशौ च गुरू विरतौ दीर्घयुक्तौ स्यातां तथा महेशनेत्रदिग्भिः त्रिभिर्दशभिश्च विश्रामः यतिःस्यात् तदा हे सुदति !

( सुष्ठु दन्ता यस्यास्तत्संबुद्धौ ) सा प्रहर्षिणी ननु विज्ञेया ज्ञातव्या ॥ ३३ ॥

भाषार्थः-हे मृदु भाषण करनेवाली ! जिसमें तीन आदिके और अष्टम दशम द्वादश और त्रयोदश अक्षर दीर्घ हों और ३ और १० अक्षरों- पर विश्राम हो तौ हे सुन्दर दांतवाली ! उसे प्रहर्षिणी छन्द जानना चाहिये ॥ ३३ ॥

आद्यं द्वितीयमपि चेद्गुरु तच्चतुर्थं यत्राष्टमं च
दशमान्त्यमुपान्त्यमन्त्यम् । अष्टाभिरिन्दु-
वदने विरतिश्च षड्भिः कान्ते वसन्ततिलकां
किल तां वदन्ति ॥ ३४ ॥

सं०टी०-आद्यमिति । हे इन्दुवदने । ( इन्दुवद्वदनं यस्या- स्तत्संबुद्धौ ) यत्र यस्मिन् वृत्ते आद्यं द्वितीयं चतुर्थम् अष्टमं दशमान्त्यम् एकादशम् उपान्त्यम् ( अन्त्यस्य समीपम् ) त्रयोदशम् अन्त्यं चतुर्दशं चेत् गुरु दीर्घम् अष्टाभिः षड्भिश्च विरतिः विश्रामः स्यात् तदा हे कान्ते ! तां वसन्ततिलकां वदन्ति किल पंडिता इति शेषः ॥ ३४ ॥

भाषार्थः-हे चन्द्रमुखि ! जो प्रथम द्वितीय चतुर्थ अष्टम एकादश त्रयोदश तथा चतुर्दश अक्षर जिसमें दीर्घ हों और ८ और ६ पर विश्राम हो तौ हे कामिनि ! उसको पंडितजन वसन्ततिलका कहते हैं ॥ ३४ ॥

प्रथममगुरु षट्कं विद्यते यस्य कान्ते तदनु च
दशमं चेदक्षरं द्वादशान्त्यम् । गिरिभिरथ तुरंगै-
र्यत्र कान्ते विरामः सुकविजनमनोज्ञा मालिनी
सा प्रसिद्धा ॥ ३५ ॥

सं०टी०-प्रथममिति । हे कान्ते ! यत्र यस्मिन्वृत्ते प्रथमं षट्कं प्रथमतः षष्ठपर्यन्तं तदनु दशमं द्वादशान्त्यं त्रयोदशं

चाक्षरम् अगुरु लघु विद्यते चेत् अथेत्यनन्तरं यत्र गिरिभिः अष्टाभिः अथानन्तरं तुरङ्गैः सप्तभिः विरामः विश्रामः स्यात् सा सुकविजनमनोज्ञा श्रेष्ठकविजनमनोहारिणी मालिनी प्रसिद्धा ॥ ३५ ॥

भावार्थः—हे कामिनि ! जिसमें प्रथमके ६ अक्षर तथा दशम और त्रयोदश अक्षर ह्रस्व हों और आठ तथा सात अक्षरोंपर विश्राम हो तो हे सुन्दरि ! श्रेष्ठ कवि लोग उसे मालिनी छन्द कहते हैं ॥ ३५ ॥

सुमुखि लघवः पञ्च प्राच्यास्ततो दशमान्ति-
मस्तदनु ललितालापे वर्णौ तृतीयचतुर्थकौ
प्रभवति पुनर्यत्रोपान्त्यः स्फुरत्कनकप्रभे यति-
रपि रसैर्वेदैरश्वैः स्मृता हारिणीति सा ॥ ३६ ॥

सं०टी०—सुमुखीति । हे सुमुखि ! ( सुष्ठु शोभनं मुखं यस्या-स्तत्संबुद्धौ ) यत्र यस्मिन् वृत्ते प्राच्याः पूर्वे पञ्च वर्णाः लघवः ततः दशमान्तिमः एकादशः तदनु पश्चात् तृतीयचतुर्थकौ वर्णौ दशमाक्षरतः तृतीयचतुर्थौ त्रयोदशचतुर्दशाविति भावः हे ललितालापे ( ललित आलापो यस्यास्तत्सम्बुद्धौ ) पुनः उपान्त्यः षोडशश्च लघुः प्रभवति हे स्फुरत्कनकप्रभे ! ( स्फुर-न्ती कनकप्रभा कांचनप्रभा यस्यास्तत्सम्बुद्धौ ) यत्र रसैः षड्भिः वेदैश्चतुर्भिः अश्वैस्सप्तभिश्च यतिः विश्रामः अपि स्यात् तदा सा हरिणी स्मृता कथिता ॥ ३६ ॥

भावार्थः—हे मधुर आलाप करनेवाली ! जिसमें आदिके ५ अक्षर तथा एकादश, त्रयोदश, चतुर्दश और षोडश ये अक्षर ह्रस्व हों और ६ । ४ । ७ अक्षरोंपर विराम हो तो हे चमकते हुए सुवर्णके समान प्रभावाली ! वह हरिणी छन्द कहा गया है ॥ ३६ ॥

यदि प्राच्यो ह्रस्वः कमलनयने पञ्च गुरवस्त-
तो वर्णाः पञ्च प्रकृतिसुकुमाराङ्गि लघवः । त्र-

योन्ये चोपान्त्याः सुतनु जघनाभोगसुभगे रसै-
रीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥ ३७ ॥

सं०टी०-यदीति। हे कमलनयने (कमलवन्नयने यस्यास्तत्संबुद्धौ) हे प्रकृतिसुकुमाराङ्गि! (प्रकृत्या सुकुमारम् अङ्गं यस्यास्तत्संबुद्धौ) यदि प्राच्यः पूर्वो वर्णः ह्रस्वः ततः पञ्च गुरवः ततः पञ्च वर्णाः लघवः ततश्चान्ये त्रयः उपान्त्याः अन्त्यस्य समीपस्थाः चतुर्दश पञ्चदश षोडश इति भावः लघवः तथा हे सुतनु (सुष्ठु तनुर्यस्यास्तत्संबुद्धौ) हे जघनाभोगसुभगे! (जघनस्य कटिपुरोभागस्याभोगेन सुभगा सौन्दर्यशालिनी तत्संबुद्धौ) यस्यां रसैः षड्भिः ईशैः एकादशभिः विरतिः विश्रामः स्यात् सा शिखरिणी भवति ॥ ३७ ॥

भावार्थः-हे कमलके समान नेत्रवाली! यदि आदिका वर्ण ह्रस्व हो फिर ५ अक्षर दीर्घ होंय फिर ५ अर्थात् । ७ । ८ । ९ । १० । ११ । और १४ । १५ । १६ यह अक्षर लघु होंय और हे सुकुमार अंगवाली! जिसमें ६ और ११ अक्षरपर विश्राम हो तो हे सुन्दरि! हे सुन्दर जघनवाली! उसको शिखरिणी छन्द कहते हैं ॥ ३७ ॥

द्वितीयमलिकुन्तले गुरु षडष्टमं द्वादशं चतु-
र्दशमथ प्रिये गुरु गभीरनाभिह्रदे । सपञ्चद-
शमन्तिमं तदनु यत्र कान्ते यतिर्गिरीन्द्रफण-
भृत्कुलैर्भवति सुभ्रु पृथ्वीति सा ॥ ३८ ॥

सं० टी०-द्वितीयमिति। हे अलिकुन्तले! (अलिवत् भ्रमरवत् असिताः कुन्तला अलकाः यस्यास्तत्संबुद्धौ) हे प्रिये! हे गभीरनाभिह्रदे! (गभीरः नाभिह्रदः यस्यास्तत्संबुद्धौ) यदि द्वितीयं षडष्टमं षष्ठम् अष्टमं द्वादशम् अथ चतुर्दशं तदनु सपञ्चदशमन्तिमं (पञ्चदशेन सह वर्तमानमन्तिमम्) पञ्चदशं

सप्तदशं चेत्यर्थः गुरु तथा हे कान्ते! हे सुभ्रु! (सुष्ठुभ्रुवौ यस्यास्तत्सम्बुद्धौ) यत्र गिरीन्द्रफणभृत्कुलैः गिरीन्द्रैः अष्टभिः फणभृत्कुलैः नवभिश्च यतिः विश्रामः स्यात् सा पृथ्वी इति छन्दः भवति ॥ ३८ ॥

भावार्थः–हे भ्रमरोंके समान श्याम अलकवाली! जो दूसरा अक्षर गुरु हो और हे गंभीरनाभिवाली! ६। ८। १२। १४। १५। १७ ये अक्षर भी दीर्घ हों और हे कामिनि! हे सुन्दर भृकुटीवाली अष्टम नवम अक्षरोंपर विश्राम हो तो उसे पृथ्वी छन्द कहते हैं ॥ ३८ ॥

चत्वारः प्राक् सुतनु गुरवो द्वौ दशैकादशौ चे-
न्मुग्धे वर्णौ तदनु कुमुदामोदिनि द्वादशान्त्यौ।
तद्वच्चान्त्यौ युगरसहयैर्यत्र कान्ते विरामो मन्दा
क्रान्तां प्रवरकवयस्तन्वि तां सङ्गिरन्ते ॥ ३९ ॥

सं० टी०–चत्वार इति। हे तन्वि! हे मुग्धे! यत्र यस्मिन् वृत्ते प्राक् प्रथमं चत्वारो वर्णाः गुरवः तदनु चेत् दशैकादशौ द्वौ दशमः एकादशश्च वर्णौ ततः द्वादशान्त्यौ त्रयोदशचतुर्दशाविति भावः। तद्वत् अन्त्यौ षोडशसप्तदशौ च गुरू तथा हे कुमुदामोदिनि (कुमुदवत् आमोदः सुगन्धिर्यस्यास्तत्संबुद्धौ) हे कान्ते! यत्र युगरसहयैः युगैश्चतुर्भिः रसैः षड्भिः हयैस्सप्तभिश्च विरामः विश्रामः स्यात् तदा हे तन्वि! प्रवरकवयः श्रेष्ठकवयः तां मन्दाक्रान्तां सङ्गिरन्ते वदन्ति ॥ ३९ ॥

भाषार्थः–हे कृश अंगवाली! हे मुग्धावस्थावाली! जो आदिके चार अक्षर गुरु हों और दशम एकादश और द्वादशके अन्त्यके त्रयोदश चतुर्दश और अन्त्यके षोडश और सप्तदश गुरु हों और हे कुमोदनीके समान सुगन्धिवाली हे कामिनी! जिसमें ४। ६। ७ अक्षरोंपर विश्राम हो तो हे कृशाङ्गी! कवीश्वर लोग उसे मन्दाक्रान्ता छन्द कहते हैं ॥ ३९ ॥

आद्यं यत्र गुरु त्रयं प्रियतमे षष्ठं ततश्चाष्टमं
सन्त्येकादशतस्त्रयस्तदनुचेदष्टादशाद्यान्तिमाः।
मार्तण्डैर्मुनिभिश्च यत्र विरतिः पूर्णेन्दुबिंबा-
नने तद्वृत्तं प्रवदन्ति काव्यरसिकाः शार्दूल-
विक्रीडितम् ॥ ४० ॥

सं०टी०-आद्यमिति। हे प्रियतमे! यत्र यस्मिन् वृत्ते आद्यं त्रयं, प्रथमं द्वितीयं तृतीयं तथा षष्ठं ततः अष्टमं गुरु तदनु एकादशतः चेत् त्रयः द्वादशत्रयोदशचतुर्दशाः गुरवः सन्ति तथा अष्टादशाद्यान्तिमाः षोडश सप्तदश ऊनविंशश्च गुरवः यत्र च हे पूर्णेन्दुबिंबानने ! ( पूर्णेन्दोः पूर्णचन्द्रस्य बिम्बवदाननं मुखं यस्यास्तत्सम्बुद्धौ ) मार्तण्डैः द्वादशभिः मुनिभिः सप्तभिः विरतिः विश्रामः स्यात् तदा काव्यरसिकाः तद्वृत्तं शार्दूलविक्रीडितं प्रवदन्ति कथयंति ॥ ४० ॥

भाषार्थः-हे प्राणप्यारी ! जिसमें आदिके तीन अक्षर तथा छठा आठवां तथा एकादशसे ३ अर्थात् १२ । १३ । १४ तथा अठारहके आदिके २ अर्थात् १६ । १७ और अन्तका १९ वां ये अक्षर गुरु हों और हे पूर्णचन्द्रके समान मुखवाली ! जो १२ और सात अक्षरों पर विश्राम हो तौ काव्यके रसिक उसे शार्दूलविक्रीडित कहतेहैं ॥ ४० ॥

चत्वारो यत्र वर्णाः प्रथममलघवः षष्ठकः सप्त-
मोपि द्वौ तद्वत्षोडशाद्यौ मृगमदतिलके षो-
डशान्त्यौ तथान्त्यौ । रम्भास्तम्भोरुकान्ते
मुनिमुनिमुनिभिर्दृश्यते चेद्विरामो बाले
वन्द्यैः कवीन्द्रैः सुतनु निगदिता स्रग्धरा सा
प्रसिद्धा ॥ ४१ ॥

इति श्रुतबोधः समाप्तः ।

सं०टी०—चत्वार इति। हे मृगमदतिलके! (मृगमदस्य तिलकं यस्यास्तत्सम्बुद्धौ) यत्र यस्मिन् वृत्ते प्रथमं चत्वारो वर्णाः षष्ठकः सप्तमः तद्वत् षोडशाद्यौ द्वौ चतुर्दश पञ्चदशौ तथा षोडशान्त्यौ सप्तदशाष्टादशौ तथा अन्त्यौ विंश एकविंशश्च अलघवः गुरव इत्यर्थः तथा हे रम्भास्तंभोरुकान्ते! (रम्भायाः कदल्याः स्तम्भौ इव उर्वोः जंघयोः कान्तिर्यस्यास्तत्संबुद्धौ) हे बाले! मुनिमुनिमुनिभिः सप्तभिः सप्तभिः सप्तभिः विरामः विश्रामश्चेत् तदा हे सुतनु! वन्द्यैः कवीन्द्रैः श्रेष्ठकविभिः सा स्रग्धरा निगदिता कथिता ॥ ४१ ॥

द्विपञ्चनवभूवर्षे टीका छात्रोपकारिणी।
छन्दसः श्रुतबोधस्य भाद्रे संपूर्णतामगात्॥

इति श्रीमदागरानगरनिवासिगुर्जरविप्रकुलोद्भवज्योतिर्विद्वाल-
मुकुन्दभट्टसूरिसूनुरामेश्वरभट्टविरचिता छात्रोपकारिण्याख्या श्रुतबोधसंस्कृतव्याख्या समाप्ता॥

भाषार्थः—हे कस्तूरीके तिलकवाली! जिसमें ४ अक्षर आदिके गुरु हों तथा ६। ७। १४। १५। १७। १८। २०। २१। ये अक्षर भी दीर्घ हों और हे केलेके खंभके समान सुन्दर जंघावाली! जिसमें ७।७।७। वर्णों पर विश्राम हो तो हे बाले! हे सुन्दरि! उसको कवीश्वरोंने स्रग्धरा नामक छन्द कहा है॥ ४१॥

आगरानगरनिवासि पं० रामेश्वर भट्टकी बनायी हुई
श्रुतबोध ग्रन्थकी भाषाटीका समाप्त हुई॥

## अथ परिशिष्टम् ।



पद्यं नाम चतुष्पदी । सा द्विविधा जातिः वृत्तं च ॥ मात्रासंख्याता जातिः वर्णसंख्यातं वृतम् । वृत्तं त्रिविधम् । समम् अर्द्धसमं विषमं च ॥ तेषां निम्नलिखितानि लक्षणानि वृत्तरत्नाकरे निर्दिष्टानि ॥ यथा-

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते ॥ १ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ।
द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते ॥ २ ॥
यस्य पादचतुष्केपि लक्ष्म भिन्नं परस्परम् ।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ ३ ॥

भाषार्थः--जिसमें चार पद हों उसे चतुष्पदी कहते हैं । वह २ प्रकारकी जाति और वृत्त । जिसमें मात्राकी संख्या हो उसको जाति कहते हैं । जिसमें वर्णोंकी गणना हो उसे वृत्त कहते हैं । वृत्त तीन प्रकारके हैं सम, अर्द्धसम और विषम । उनके लक्षण वृत्तरत्नाकरमें इस प्रकार लिखे हैं-

जिसके चारों चरणोंमें समान लक्षण हों उसको छन्दःशास्त्रके ज्ञाता लोग समवृत्त कहते हैं ॥ १ ॥ और जिसका प्रथम चरण और तीसरा चरण तुल्य हो दूसरा और चतुर्थ तुल्य हो उसको अर्द्धसम कहते हैं ॥ ॥ २ ॥ जिसके चारों चरण आपसमें भिन्न लक्षणके हों उसको छन्द ज्ञाता लोग विषमवृत्त कहते हैं ॥ ३ ॥

### गणलक्षणम् ।

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः । जो गुरुमध्यगतो रलमध्यः सोन्तगुरुः कथितोन्तलघुस्तः ॥ १ ॥

गुरुरेको गकारस्तु लकारो लघुरेककः । क्रमेण चैषां रेखाभिः संस्थानं दर्श्यते यथा ॥ २ ॥

सं०टी०-छन्दश्शास्त्रेषु त्रिवर्णात्मकाः अष्टौ गणाः प्रभवन्ति यथा ( मः ) त्रिगुरुवर्णात्मकः ( नः ) त्रिलघुवर्णात्मकः ( भः ) आदिगुरुस्त्रिवर्णात्मकः ( यः ) आदिलघुस्त्रिवर्णात्मकः ( जः गुरुमध्यस्त्रिवर्णात्मकः ( रः ) लघुमध्यस्त्रिवर्णात्मकः ( सः ) अन्त्यगुरुस्त्रिवर्णात्मकः ( तः ) अन्त्यलघुस्त्रिवर्णात्मकः (गः) एको गुरुवर्णः । ( लः ) एको लघुवर्णः ।

भाषार्थः-मगणमें ३ गुरु हैं जैसे ऽऽऽ नगणमें ३ लघुहैं जैसे ।।।, भगणमें आदिमें गुरु है जैसे ऽ।।, यगणके आदिमें लघु है जैसे ।ऽऽ, जगणके मध्यमें गुरु है जैसे ।ऽ।, रगणके मध्यमें लघु है जैसे ऽ।ऽ, सगणके अन्त्यमें गुरु है जैसे ।।ऽ, तगणके अन्त्यमें लघु है जैसे ऽऽ। इस प्रकार छन्दःशास्त्रमें तीन तीन वर्णोंके आठ गण हैं, गकारका एक गुरु वर्ण है जैसेऽ, लकारका एक लघु वर्णहै जैसे ।, ॥

श्लोके चत्वारश्चरणा भवन्ति। प्रति पद्यस्य आदौ मकाराक्षरादीनां प्रयोगाच्छुभाशुभफलनिर्णयः कथ्यते ॥ यथा--

मो भूमिः श्रियमातनोति यजलं वृद्धिं रवह्नि-
र्मृतिं सो वायुः परदेशदूरगमनं तव्योमशून्यं
फलम् । जः सूर्यो भयमाददाति विपुलं भेन्दु-
र्यशो निर्मलं नो नागश्च सुखप्रदः फलमिदं
प्राहुर्गणानां बुधाः ॥ १ ॥

भाषार्थः-श्लोकमें चार चरण होतेहैं प्रत्येक पद्यके आदिमें मकाराद्यक्षरोंके प्रयोगमें शुभाऽशुभ फलका निर्णय और गणोंके देवता निम्नलिखित चक्रसे जानना ॥ १ ॥

| संख्या | गणनाम | देवता | फल | स्वरूप |
|---|---|---|---|---|
| १ | मगण | भूमि | लक्ष्मीलाभ | ऽऽऽ |
| २ | यगण | वरुण | प्रारब्धोदय | ।ऽऽ |
| ३ | रगण | अग्नि | मृत्यु | ऽ।ऽ |
| ४ | सगण | वायु | विदेशगमन | ।।ऽ |
| ५ | तगण | आकाश | निष्फलता वा राज्यलाभ | ऽऽ। |
| ६ | जगण | सूर्य | भय | ।ऽ। |
| ७ | भगण | चन्द्र | कीर्तिलाभ | ऽ।। |
| ८ | नगण | सर्प | सुख तथा स्वर्गलाभ | ।।। |

संयोगाद्यं दीर्घं सानुस्वारं विसर्गसंमिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ १ ॥

विकल्पेनेति यथा—"तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि। अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति१॥" अत्र सुन्दरि इति पदस्य ग्राम्यशब्दे परे विकल्पेन लघुत्वम् । तथाच—अच्युतचरिते ॥ रक्तेन केशिदशनक्षतसंभवेन रेजे समण्डिततरो हरिबाहुदण्डः । तद्दन्तसंदलितभीमभुजप्रतापवह्नेरिव स्फुटकणप्रकरेण कीर्णः ॥ २ ॥ अत्र प्रथमतृतीयपादान्तस्यापि लघोर्गुरुत्वम् ।

भाषार्थः—संयोगके आदिका, अनुस्वार तथा विसर्ग युक्त अक्षरको गुरु मानना चाहिये और पादके अन्तमें विकल्प करके दीर्घ मानना चाहिये जैसे "तरुणं सर्षपशाकं" इत्यादि श्लोकमें ग्राम्यशब्दके परे रहते सुन्दरि शब्दको विकल्प करके लघुत्व है और जैसा अच्युत चरितमें "रक्तेन केशिदशनक्षतसंभवेन" इस श्लोकके प्रथम तृतीय पादके अन्त्य लघु अक्षरको गुरुत्व है ॥

प्रह्वेवेति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम् । तथाहि कुमारसंभवे "सा मंगलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा" । अत्र प्रशब्देपरे गुरोर्लघुत्वम् । तथाच माघकाव्ये "प्राप्तनाभिह्रदमज्जनमाशु प्रस्थितं निवसनग्रहणाय" इत्यत्र

ह्रशब्दे परे गुरोर्लघुत्वम् । किन्तु तीव्रप्रयत्नोच्चारणेनात्र लघुत्वमिति कण्ठाभरणः । यदुक्तम्–यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ॥ न छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥

भाषार्थः–'प्रह्रेवेति' यह पिंगल मुनिका विकल्पविधायक सूत्रहै अर्थात् प्र और ह्र परे हों तो इनके पूर्वके अक्षरको विकल्प करके लघुत्व है जैसा कुमारसंभवमें उदाहरण दिया है कि " सा मंगलस्नानविशुद्धगात्री गृहीतप्रत्युद्गमनीयवस्त्रा " यहां ( प्र ) अक्षर परे रहते ( त ) को गुरु मानना चाहिये था सो लघु मानाहै । अब ( ह्र ) का उदाहरण माघकाव्यका देखो कि "प्रासनाभिह्रदमज्जनमाशु" यहां ह्रअक्षर परे रहते ( भि ) को गुरुत्व था परन्तु लघुत्वही रहा परन्तु शीघ्र बोलनेसे संयोगके आदिके अक्षरको ह्रस्व बोलनेमं कुछ दोष नहींहै क्योंकि कण्ठाभरणमें लिखा है "यदा तीव्रप्रयत्नेन" इत्यादि अर्थात् शीघ्र बोलनेसे संयोगके आदिके गुरु अक्षरको लघुता हो तो पण्डितलोग उसको छन्दोभङ्ग नहीं कहते हैं ॥

## यतिः ।

यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते ।
सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया ॥१॥

भाषार्थ–जहां जिह्वाका नियत विश्राम स्थान हो उसको कवियोंने यति कहाहै और उसीको अपनी इच्छानुसार विच्छेद वा विराम आदिभी कहते हैं ॥ १ ॥

श्लोकस्य चतुर्थांशः पादो भवति । स च समवृत्ते एकाक्षरादारभ्य षड्विंशत्यक्षरपर्यन्तमेकैकाक्षरवर्द्धनेन उक्थादि संज्ञां लभते यथा–

उक्थात्युक्था तथा मध्या प्रतिष्ठान्यासुपूर्विका ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥१॥
त्रिष्टुप् च जगती चैव तथातिजगती मता॥ शक्करी सातिपूर्वास्यादष्टयत्यष्टी तथा स्मृते ॥ २ ॥

**धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः । वि-
कृतिः सँस्कृतिश्चैव तथातिकृतिरुत्कृतिः ॥ ३ ॥**

भाषार्थः-श्लोकके चतुर्थांशको पाद कहते हैं । उससे समवृत्तमें एक अक्षरसे आदिलेकर २६ अक्षरपर्यन्त एक २ अक्षरके बढानेसे उक्थादि छन्द बनते हैं उनके क्रमसे निम्नलिखित नाम हैं ॥

( १ ) उक्था ( २ ) अत्युक्था ( ३ ) मध्या ( ४ ) प्रतिष्ठा ( ५ )सुप्रतिष्ठा ( ६ ) गायत्री ( ७ ) उष्णिक् ( ८ ) अनुष्टप् ( ९ ) बृहती ( १० ) पंक्तिः ( ११ ) त्रिष्टुप् ( १२ ) जगती ( १३ ) अतिजगती ( १४ ) शक्वरी ( १५ ) अतिशक्वरी ( १६ ) अष्टिः ( १७ ) अत्यष्टिः ( १८ ) धृतिः ( १९ ) अतिधृतिः ( २० ) कृतिः ( २१ ) प्रकृतिः ( २२ ) आकृतिः ( २३ ) विकृतिः ( २४ ) संस्कृतिः ( २५ ) अतिकृतिः ( २६ ) उत्कृतिः ॥



श्रीः ।

# अथ श्रुतबोधप्रश्नाः



१–पद्यं कतिविधम् ।
२–पद्यस्य लक्षणं सोदाहरणं लिख्यताम् ।
३–वृत्तं कतिविधम् ।
४–विषमवृत्तस्य लक्षणं लिख्यताम् ।
५–जातिच्छन्दस्तु कति मात्राः कतिगणाः भवन्ति तेषामुदाहरणानि देयानि ।
६–यतिः का भवति कैरन्यैः पदैश्च सा अभिधीयते ।
७–पादः को भवति ।
८–यस्मिन् छन्दसि इन्द्रवज्रोपेन्द्रवज्राछन्दसोः द्वौ २ चरणौ भवेतां तच्छन्दसः किन्नाम किञ्च तल्लक्षणम् ।
९–चम्पकमालाछन्दसः अंत्याक्षरविहीनत्वात् किमपि छन्दो भवति न वा भवति चेत्तस्योदाहरणं देहि ।
१०–उपजातिविपरीतपूर्वयोः को भेदः ।
११–इंद्रवज्रोपेंद्रवज्राच्छंदसोः परस्परं को विशेषः ।
१२–चम्पकमालामणिबंधच्छंदसोः परस्परं को भेदः ।
१३–माणवकच्छंदसः किं लक्षणम् ।
१४–यत्र रथोद्धतायाः नवमाक्षरं दशमवत् दशमं नवमवत् भवेत्तदा किं छन्दो भवति सलक्षणं लिख्यताम् ।
१५–तोटकवृत्तस्य किं लक्षणम् । यदि तोटकवृत्तस्य पञ्चमवर्णो दीर्घः स्यात् षष्ठाक्षरं च लघु भवेत् तच्छंदः उदाह्रियताम् ।
१६–यदि स्वागतावृत्तस्य दशमाक्षरं नवमवत् भवेत् नवमाक्षरं दशमवत् क्रियते किन्नाम तच्छन्दसः । लक्षणसहितमुदाहरणं दीयताम् ।
१७–आर्योपगीत्योः को भेदः ।
१८–यदि उपेंद्रवज्रावृत्तस्योपांत्यवर्णाः लघवः भवेयुस्तदा किं छन्दो भवितुमर्हति ।
१९–यस्मिन् वृत्ते आद्यास्त्रयः अष्टमः दशमः द्वादशस्त्रयोदशश्च गुरवः किन्नामधेयं तद्वृत्तस्य ।
२०–यत्र सप्तमदशमाक्षरे परित्यज्य गुरवः भवेयुः पञ्चमसप्तमाक्षरैः विश्रामः स्यात् किन्नाम तच्छन्दस इत्युच्यताम् ।

२१–जात्युपजात्योः परस्परं को भेदः ।

२२–यदि कस्मिंश्चिदेकादशाक्षरवृत्ते द्वितीयचतुर्थपञ्चमषष्ठाष्टमाक्षराणि लघूनि तदा किं छन्दो भवति । सलक्षणं ब्रूहि ।

२३–मन्दाक्रान्तायाः अन्त्ययतिराहित्ये किमपि छन्दो भवति न वा । भवति चेत्किन्नामधेयन्तद्वृत्तस्य ।

२४–यदि वंशस्थवृत्तस्य पादेषु पूर्ववर्णा गुरवः स्युस्तदा किमपि छन्दो भवितुं शक्यते न वा शक्यते चेत्तन्नामलक्षणञ्च देयम् ।

२५–यत्राद्यं वर्णचतुष्टयं लघु स्यात् ततो पञ्चमषष्ठौ वर्णौ दीर्घौ स्यातां तर्हि किं छन्दो भवति तस्योदाहरणं लेखनीयम् ।

२६–आद्यं चतुर्थं पञ्चमकमपि यस्मिन् वृत्ते गुरु तद्वृत्तस्य किन्नामधेयमिति सलक्षणं ब्रूहि ।

२७–यस्मिन् छंदसि तुर्यं पञ्चमकञ्च लघू स्यातां तर्हि किन्नाम तच्छन्दसः ।

२८–यत्र वृत्ते द्वितीयचतुर्थषष्ठाष्टमाक्षराणि गुरूणि सन्ति तद्वृत्तं सलक्षणमुदाह्रियताम् ।

२९–मन्दाक्रान्ताहंसीछन्दसोः को भेदः ।

३०–दोधकवृत्तस्य किं लक्षणं सोदाहरणं लेख्यम् ।

३१–श्रुतबोध इति नामान्वर्थमनन्वर्थं वा । अन्वर्थं चेत् कथं "पादान्तस्थं विकल्पेन" साध्याहारं व्याख्यायतामुदाह्रियताञ्च ।

३२–यस्मिन् वृत्ते षष्ठो नवमश्च लघू वर्णौ स्यातांश्चतुर्भिस्सप्तभिश्च विश्रामः स्यात् किन्नामधेयन्तच्छन्दसः । सलक्षणं व्याख्यायताम् ।

३३–गुरुसंज्ञा केषां भवतीति लिख्यताम् ।

३४–यस्मिन् वृत्ते त्रिषट्सप्तमनवमाक्षराणि ह्रस्वानि स्युः किन्नाम तच्छन्दसः ।

३५–शार्दूलविक्रीडितस्य किं स्वरूपम् ।

३६–विपरीतपूर्वायाः किं लक्षणम् तस्य पृथगुदाहरणं देहि ।

३७–मणिबन्धस्यान्ते एकगुरुयोजने किं छन्दो भवति ।

३८–प्रहर्षिण्याः वसन्ततिलकायाश्च लक्षणं लिख्यताम् ।

३९–यस्यां वंशस्थपादानां पूर्ववर्णाः गुरवस्सन्ति सा किं छन्दः कथ्यते व्याख्येयमुदाह्रियताञ्च ।

४०–यस्मिन् तृतीयषण्नवमद्वादशाक्षराणि परित्यज्य अन्याक्षराणि लघूनि चेत् किन्नाम तद्वृत्तस्य किञ्च तल्लक्षणम् ।

४१–मालिनीहरिणीशिखरिणीपृथ्वीछन्दसां लक्षणानि लिख्यन्ताम् ।

४२-त्रयोदशाक्षरवृत्ते यदि तृतीयपञ्चमषष्ठसप्तमाष्टमदशमद्वादशवर्णा लघवश्चतुर्भिर्नवभिश्चाक्षरैः विरतिः स्यात् तदा किं छन्दः कथ्यते ।

४३-यदि तोटकवृत्तस्य पञ्चमवर्णो दीर्घः स्यात् षष्ठो वर्णः ह्रस्वः स्यात् तर्हि किमाख्यं छन्दो भवितुं शक्यते सलक्षणमुदाहरणं देहि ।

४४-भुजङ्गप्रयातवृत्ते चतुर्थसप्तमदशमलघुवर्णस्थाने द्वादशाक्षरस्थानेच यदा गुरुवर्णाः क्रियन्ते तदा किं छन्दो भवतीति सलक्षणमुत्तरं देयम् ।

४५-यद्युपेंद्रवज्राछन्दसः प्रतिचरणे एकादशवर्णा ह्रस्वास्तन्नामलक्षणोपेतमुदाहरणञ्च दीयताम् ।

४६-यस्मिन् वृत्ते प्रथमचतुर्थसप्तमदशमाक्षराणि ह्रस्वानि स्युः नामधेयङ्कथनीयं तच्छंदसः ।

४७-मंदाक्रांताशार्दूलविक्रीडितस्रग्धराछन्दसां लक्षणानि व्याख्यायंताम् ।

४८-यदिद्रुतविलंबितछन्दसः आद्यतृतीययोः पादयोः प्रथमाक्षरं चेन्न स्यात् तदा किन्नाम छन्दो भविष्यति तस्य पृथग् उदाहरणं लेख्यम् ।

४९-निम्नलिखितानि कानि२छन्दांसि तेषां नामानिलक्षणान्यपि लेख्यानि।

हैमवते कटकतटे शशाङ्कचूडामणिस्तपस्तनुते ।
यत्नेन येन केनचिदस्तु प्रणयी स पार्वत्याम् ॥ १ ॥
सुभव्यता विधायकः समस्तसिद्धिदायकः ।
विनायकप्रणायकः करोतु शं विनायकः ॥ २ ॥
विरचितसमरोचितांगभूषः, परिहितभूषितवेश
एष भाति । जलधरनिकरोपरोधशून्यो रविरिव
राजसुतः शरत्प्रचण्डः ॥ ३ ॥

५०-आर्याऽनुष्टुप्छन्दोद्वयं साधारणरीत्या विरच्यताम् ॥ इति ॥

---

पुस्तक मिलनेका ठिकाना-
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस-बंबई.